ॐव्युत्पत्तिःॐ द्विजकुञ्जराणां—द्विजाः कुञ्जरा इव द्विजकुञ्जरास्तेषाम्, "उपमितं-व्याघ्राऽऽदिभिः सामान्याऽप्रयोगे" इति समासः, "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥" इत्यमरः। तृणीकृताऽशेषगुणाः—तृणीकृता अशेषा गुणा येन सः। पापाऽऽशयान्—पाप आशयो येषां तान्। "अभिप्रायश्छन्द आशयः" इत्यमरः।

ॐभाषाऽर्थःॐ श्रेष्ठ ब्राह्मणोंको निराकरण करनेवाले और अतिशय अज्ञानसे श्रेष्ठ ब्राह्मणोंके सम्पूर्ण गुणोंको तिरस्कार करनेवाले रावणने जागकर पहले पापपूर्ण अभिप्रायवाले श्रेष्ठ ब्रह्मराक्षसोंकी अभ्युदयके लिए पूजा की ॥ ४४ ॥

मायाविभिस्त्रासकरैर्जनानामाप्तैरुपादानपरैरुपेतः।
सतां विघातैकरसैरविक्षत् सदः परिक्षोभितभूमिभागम् ॥ ४५ ॥

अन्वयः—मायाविभिः जनानां त्रासकरैः उपादानपरैः सतां विघातैकरसैः आप्तैः उपेतः ( सन् , दशाऽऽस्यः ) परिक्षोभितभूमिभागं सदः अविक्षत् ।

व्याख्या—मायाविभिः=मायाभिः, जनानां = लोकानां, त्रासकरैः=भीत्युत्पादकैः, अतिरौद्रत्वादिति शेषः । उपादानपरैः=ग्रहणपरैः, स्वाम्यर्थसम्पादनतत्परैरिति भावः । सतां=सज्जनानां, विघातैकरसैः = विनाशैकाऽनुरागैः, आप्तैः = विश्वस्तैः, राक्षसैरिति शेषः । उपेतः=उपगतः सन् , दशास्य इति शेषः । परिक्षोभितभूमिभागं=परिसञ्चालितधरण्येकदेशं, स्वागत्या इति शेषः । एतादृशं सदः = सभाम् , अविक्षत् = प्रविष्टः ।

ॐव्युत्पत्तिःॐ मायाविभिः—मायाऽस्ति एषां ते मायाविनः, तैः, "अस्मायामेधास्रजो विनिः" इति विनिः। व्रीह्यादिपाठादिनिठनौ च—मायी मायिक इत्यपि। त्रासकरैः—त्रासं कुर्वन्तीति तच्छीलास्त्रासकरास्तैः, "कृञो हेतुताच्छील्याऽऽनुलोम्येषु" इति टप्रत्ययः। विघातैकरसैः—एको रसो येषां त एकरसाः, विघात एकरसास्तैः। आप्तैः—"आप्तप्रत्ययितौ समौ" इत्यमरः । परिक्षोभितभूमिभागं—परिक्षोभितो भूमिभागो यस्मिंस्तत्। अविक्षत्—"विश प्रवेशने" इति धातोर्लुङ्। "शल इगुपधादनिटः क्सः" इति क्सः।

ॐभाषाऽर्थःॐ मायावी मनुष्योंको त्रास देनेके स्वभाववाले, स्वामीके प्रयोजन, का सम्पादन करनेमें तत्पर और सज्जनोंका नाश करनेमें ही एकमात्र अनुराग रखनेवाले विश्वस्त राक्षसोंसे उपगत होते हुए रावणने अपने आगमनसे हिलने वाले भूभागसे युक्त सभामें प्रवेश किया ॥ ४५ ॥

विधृतनिशितशस्त्रैस्तद्वृतं यातुधानै-
रुरुजठरमुखीभिः सङ्कुलं राक्षसीभिः ।

श्वगणिशतविकीर्णं वागुरावन्मृगीभि-
र्वनमिव सभयाभिर्देवबन्दीभिरासीत् ॥ ४६ ॥

अन्वयः—विधृतनिशितशस्त्रैः यातुधानैः युतम् उरुजठरमुखीभिः राक्षसीभिः सभयाभिः देवबन्दीभिः सङ्कुलं तत् श्वगणिशतविकीर्णं वागुरावत् सभयाभिः मृगीभिः सङ्कुलं वनम् इव आसीत् ।

व्याख्या—विधृतनिशितशस्त्रैः=गृहीततीक्ष्णायुधैः, यातुधानैः=राक्षसैः, युतं=युक्तम्, उरुजठरमुखीभिः = विशालोदराऽऽननाभिः, राक्षसीभिः = रक्षःस्त्रीभिः, एवं च—सभयाभिः = भीतियुक्ताभिः, देवबन्दीभिः = बन्दीभूतसुरललनाभिश्च, सङ्कुलं=व्याप्तं, तत्=सदः, श्वगणिशतविकीर्णम् = आखेटकशतच्छन्नं, वागुरावत्= मृगबन्धनीयुक्तं, तत एव सभयाभिः = भीतियुक्ताभिः, मृगीभिः = हरिणीभिः, संकुलं = व्याप्तं, वनम् इव=अरण्यम् इव, आसीत् = अभवत् ।

॥व्युत्पत्तिः॥ विधृतनिशितशस्त्रैः—विधृतानि निशितानि शस्त्राणि यैस्तैः । उरुजठरमुखीभिः—जठरं च मुखं च जठरमुखं, "द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्" इति समाहारद्वन्द्वः । उरु जठरमुखं यासां ता उरुजठरमुख्यस्ताभिः । "स्वाऽङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीष् । श्वगणिशतविकीर्णं—शुनां गणः श्वगणः, सोऽस्ति एषां ते श्वगणिनः, "अत इनिठनौ" इति इनिप्रत्ययः । श्वगणिनां शतं, तेन विकीर्णम् । वागुरावत्—वागुराऽस्ति यस्मिंस्तत्, मतुप्प्रत्ययः । "वागुरा मृगबन्धनी" इत्यमरः । उपमाऽलङ्कारः । मालिनी वृत्तम् ।

॥भाषाऽर्थः॥ तीक्ष्ण शस्त्रोंको धारण करनेवाले राक्षसोंसे युक्त, विशाल पेट और मुखवाली राक्षसियोंसे एवम् डरनेवाली निरुद्ध देवललनाओंसे व्याप्त वह सभाभवन सैंकड़ों शिकारियोंसे और मृगपाशोंसे युक्त एवम् डरनेवाली मृगियोंसे व्याप्त वनके सदृश हो गया ॥ ४६ ॥

जलद इव तडित्वान् प्राज्यरत्नप्रभाभिः
प्रतिककुभमुदस्यन् निस्वनं धीरमन्दम् ।
शिखरमिव सुमेरोरासनं हैममुच्चै-
र्विविधमणिविचित्रं प्रोन्नतं सोऽध्यतिष्ठत् ॥ ४७ ॥

अन्वयः—उच्चैः सः प्राज्यरत्नप्रभाभिः तडित्वान् जलद इव प्रतिककुभं धीरमन्दं निस्वनम् उदस्यन् विविधमणिविचित्रं सुमेरोः शिखरम् इव प्रोन्नतं हैमम् आसनम् अध्यतिष्ठत् ।

व्याख्या—उच्चैः उन्नतः, सः=रावणः, प्राज्यरत्नप्रभाभिः=प्रचुरमणिद्युतिभिः, तडित्वान्=विद्युद्युक्तः, जलद इव=मेघ इव, प्रतिककुभं=दिशि दिशि, धीरमन्द्रं = मन्दगम्भीरं, निस्वनं = शब्दम् , उदस्यन्=क्षिपन् , विविधमणिविचित्रं=नानावर्णरत्नकर्बुरं, सुमेरोः=हेमाद्रेः, शिखरम् इव=शृङ्गम् इव, प्रोन्नतम् = अत्युच्चं, हैमं= सौवर्णम् , आसनम्=उपवेशनस्थानं सिंहासनमित्यर्थः । अध्यतिष्ठत्=अधिष्ठितवान् ।

ॐव्युत्पत्तिःॐ प्राज्यरत्नप्रभाभिः—प्राज्यानि च तानि रत्नानि प्राज्यरत्नानि, तेषां प्रभाभिः । तडित्वान्—तडितः सन्ति यस्य सः । मतुप्प्रत्ययः । "झय" इति मस्य वः । अत्राऽयं शब्दो यौगिको बोध्यः । प्रतिककुभं—वीप्सायामव्ययीभावः । "अच्प्रत्यन्ववपूर्वात्सामलोम्नः" इत्यत्र "अच्" इति योगविभागात् अन्यत्राऽपि समासान्तोऽच् । अतः पद्मनाभ इत्यत्रेव अत्राऽपि समासाऽन्तोऽच् । आसनम्—अधिपूर्वकस्य स्थाधातोर्योगे "अधिशीङ्स्थाऽऽसां कर्म" इति आधारस्य कर्मत्वम् । अत्रोपमाऽलङ्कारः । मालिनी वृत्तम् ।

ॐभावार्थःॐ उन्नत रावण प्रचुर रत्नोंकी द्युतियोंसे विजलियोंसे युक्त मेघके सदृश हो प्रतिदिशामें मन्द और गम्भीर शब्दको प्रकट करता हुआ अनेक रत्नोंसे विचित्र सुमेरु पर्वतके शिखरके सदृश अत्युन्नत सौवर्ण सिंहासनपर आरूढ हुआ ॥ ४७ ॥

इति श्रीचन्द्रकलाऽऽख्यया नव्यव्याख्यया मण्डिते श्रीभट्टिकाव्ये तृतीये प्रसन्नकाण्डे लक्षणरूपे द्वितीयः परिच्छेदः ( वर्गः ) तथा लक्ष्यरूपे कथानके प्रभातवर्णनं नाम एकादशः सर्गः ।

ॐ तत्सत्कृष्णार्पणमस्तु ।

# ७–११ सर्गात्मकं भट्टिकाव्यम्
## श्लोकानुक्रमणिका

प्राप्तिस्थानम्

चौखम्बा संस्कृत सीरीज आफिस,

पोस्ट बाक्स नं० ८, वाराणसी—१